M Muir
Ap 25
1875

# मतपरीक्षा

# A SKETCH

OF THE

# ARGUMENT FOR CHRISTIANITY,

AND

# AGAINST HINDUISM,

**In Sanskrit Verse.**


BY J. MUIR, ESQ.,

BENGAL CIVIL SERVICE


प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥


**Calcutta:**

BISHOP'S COLLEGE PRESS.

MDCCCXXXIX.

Ἐλεύθερος γὰρ ὢν ἐκ πάντων, πᾶσιν ἐμαυτὸν ἐδούλωσα, ἵνα τοὺς πλείονας κερδήσω. Καὶ ἐγενόμην τοῖς Ἰουδαίοις ὡς Ἰουδαῖος ἵνα Ἰουδαίους κερδήσω· τοῖς ὑπὸ νόμον, ὡς ὑπὸ νόμον, ἵνα τοὺς ὑπὸ νόμον κερδήσω· Τοῖς ἀνόμοις ὡς ἄνομος, (μὴ ὢν ἄνομος Θεῷ ἀλλ' ἔννομος Χριστῷ) ἵνα κερδήσω ἀνόμους. ἐγενόμην τοῖς ἀσθενέσιν ὡς ἀσθενὴς, ἵνα τοὺς ἀσθενεῖς κερδήσω. Τοῖς πᾶσι γέγονα τὰ πάντα, ἵνα πάντως τινὰς σώσω.

S. Pauli Epist. I. ad Corinth. ix. 19—22.

Τόλμα, ξεῖνος ἐπὶ ξένης,
* * * * ὅτι καὶ πόλις
Τέτροφεν ἄφιλον ἀποστυγεῖν,
Καὶ τὸ φίλον σέβεσθαι.

Soph. Œd. Col. v. 184.

अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनं ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्ममिच्छता ॥

Menu ii. 159.

# PREFACE.

---

The principle of "*becoming all things to all men*," is not only sanctioned by human reason, but enforced by Apostolical authority; and can, therefore, never be neglected by any Teacher without detriment to the legitimate effect of his instructions. Individual tastes are for the most part susceptible of being converted by a judicious and dexterous preceptor into the instruments of intellectual and moral benefit to their possessors. There is, doubtless, some one particular avenue by which the understanding and heart of every human being may be more certainly and readily reached than by any other way; and what is true of individuals, is also true of nations, or of large bodies of men, similar in their natural character, situated in similar circumstances, and exposed to the action of the same influences. In their case, some particular scheme of instruction, formed on and adapted to their natural and adventitious peculiarities, must be above all others effective. But where truth has to contend against interest, prejudice, and "the oppositions of science," which though "falsely so called," is yet the deeply revered object of a not altogether unintelligent devotion, it becomes more than ever necessary to call in every auxiliary force which can aid in undermining or beating down obstacles so formidable.

It is plain that this course is very necessary to be pursued with the learned Hindus. Their lofty ideas —springing (we may charitably hope) far more from delusion than from craft—of the antiquity of their nation and national institutions, of the peculiar dignity of their own priestly order, and of the sacredness of their Scriptures, handed down and interpreted, as they believe, by successive generations of inspired sages, conspire with baser suggestions of interest, and the fear of shame and worldly loss, to render them deaf to the voice of truth. If then this voice, by uttering the accents of their own venerated and polished language, can acquire any additional potency to charm and to persuade, the neglect of such a soothing medium of instruction appears to be nothing less than the needless abandonment of an important instrument of success in the most momentous of all enterprises. This argument acquires additional force if the Pandits are found to have a prejudice against the use of the vernacular tongues as the vehicles of religious and philosophical discussions; and if, as is the case, the knowledge of Sanskrit, thought limited to a small class in each province, is yet common to the learned throughout the whole Continent of India.

These considerations appear to be sufficient to justify the attempt which has been made in these pages to follow *(haud passibus æquis)* the example which has been set by the Rev. Dr. Mill, in his "Christa Sangita," of moulding the instruction intended for the learned men of India into a form congenial to their national models. A sketch of the argument is all that has been attempted; which ought undoubtedly

to be followed by a more detailed statement. But until the subject has begun to be viewed with attention and interest, a brief abstract will probably be found as serviceable as an elaborate discussion.

The following is the plan of the tract :—



I should mention, that I am indebted to the Works of the Rev. Dr. Wilson, and the Rev. Mr. Mundy on Hinduism, for some ideas and quotations.

श्रीपित्रे पुत्रायच सदात्मनेच नमः ॥

—०००—

॥ शिष्य उवाच ॥

संसारेऽतीवबाहुल्यं धर्म्माणां विद्यते गुरो ।
विरुद्धमतयुक्तानां भिन्नानां चापि रीतिषु ॥१॥

तदन्योन्यविपर्य्ययाच्छंका मे जायते हृदि ।
सर्वाणि स्युर्यथार्थानि नवेति प्रोच्यतामतः ॥२॥

॥ गुरूरुवाच ॥

त्वया यद्विषये प्रश्नः क्रियते पारमार्थिकः ।
सर्वैस्तद्यत्नतो ध्येयं स्वकीयकुशलेच्छुभिः ॥३॥

अतीवदुर्गमं सत्यमिति ज्ञातं तदर्थिभिः ।
भ्रान्तिस्तु सुगमा मुग्धैर्गम्यते बहुरूपका ॥४॥

कदाचिद्विद्यते ऽनिष्टं सत्यमिष्टनिषेधकं ।
ईप्सिता तु मतभ्रान्तिः कामादिरागचोदिका ॥५॥

नरो लोभान्वितः कोऽपि यथा चौर्य्यचिकीर्षुकः ।
नायुक्तं मोषणं ज्ञेयमिति शृण्वन् गुरूदितं ॥६॥

ईप्सिताद्वचनात्तस्माद्दृढं हृष्यति सार्थकात् ।
गुरूक्त्यै तु निषिद्धश्चेत्तर्हि द्रुह्यति रोषितः ॥७॥

तथैव मानुषाः प्रायः स्वस्वरागैर्वशीकृताः ।
निराकुर्वंति शास्त्राणि कामादिरोधकानि ह ॥८॥

धर्मस्य विषये तर्हि मानवा अन्धमानसाः ।
ध्यायंतोऽपि भ्रमं गन्तुं शक्नुवंतीति निश्चयः ॥९॥

ययोश्च मतयोर्भाति वैपरीत्यं परस्परं ।
कथं तदुभयोर्ज्ञातुं याथार्थ्यं शिष्य शक्यते ॥१०॥

नरानुगतधर्मेषु विपरीतात्मकेषु ह ।
भवेयुरयथार्थानि बहुलानीति तर्क्यते ॥११॥

धीमद्भिर्निजधर्मस्य कृत्यं तर्हि परीक्षणं ॥
सद्धर्मोऽस्ति मुदा ग्राह्यो निराकृत्यस्तथानृतः ॥१२॥

धर्मस्य विषये प्रश्नो यत हेशार्थसंयुतः ।
परलोकार्थयुक्तश्च श्रेयानस्त्यैहिकार्थतः ॥१३॥

शिष्य उवाच ॥

सत्यात्मा किंविधैर्धर्म्मो लक्षणैर्हि विशिष्यते ।
असत्यो ज्ञायते कैश्चेति प्रकाशय हे गुरो ॥१४॥

॥ गुरूरुवाच ॥

विशेषलक्षणान्येव सत्यधर्मस्य शिष्य ते ।
स्फुटं वक्ष्ये तदादौ तु कार्य्यमीश्वरवर्णनं ॥१५॥

ईश्वरोऽस्तीति सर्वत्र भुवि स्वीक्रियते नरैः ।
केवलं नास्तिकैरल्पैर्नास्ति स इति कथ्यते ॥१६॥

धीमान् विवेकदृष्ट्या यः सर्वांल्लोचनगोचरान् ।
द्युभूस्थान्विषयान् पश्येज्ज्ञायेच्च कर्तृदर्शिकान् ॥१७॥

स एवानंतमीशस्य माहात्म्यं कौशलं तथा ।
दयां चाविष्कृतां सृष्टौ स्फुटं बोधेत्किलाद्भुतां ॥१८॥

येनेयमियती भूमिरियन्नृजंतुवृक्षभृत् ।
असर्ज्जि रक्ष्यते चैव तस्यानंतःपराक्रमः ॥१९॥

येन बह्वंगदेहानि नाऽस्थ्यादियुतानि ह ।
व्यरच्यंत नरादीनामाश्चर्य्यं तस्य कौशलं ॥२०॥

तथैव सर्वदा येन पाल्यंतेऽगण्यजंतवः ।
लब्धस्वधर्मयोग्यान्नाः दयासिन्धुः स विद्यते ॥२१॥

तथास्ति सद्विचारात्मा ज्ञातव्यः परमेश्वरः ।
पुण्यात्मा विमलात्मा च पापाप्रीतिकरोऽपिच ॥२२॥

यतः स सर्वमर्त्यानां स्रष्टा हृत्सु समार्पयत् ॥
सर्वेषामुत्तमां शक्तिं पुण्यपापविवेकिनीं ॥२३॥

धन्यास्तदाज्ञया नीताः सत्कर्माण्याचरंति ये ।
स्थिरस्तद्धृत्सु संतोषः स्वादुस्तिष्ठति नित्यशः ॥२४॥

पापास्तु स्वीयहृद्वाणीपुण्यादेशावहेलिनः ॥
त्रस्यंति निन्दनात्तस्यास्ताडिता मनसोऽन्तरे ॥२५॥

संसारे चापि शास्तारोऽनेके धर्मानुसारतः ।
भद्राणां कुर्वते रक्षां दंडार्हाणां च दंडनं ॥२६॥

राजानश्च दुरात्मानस्त्यक्तधर्मा भवंति ये ।
विचारो धर्मतः कार्य्य इति तेऽपि विदंति ह ॥२७॥

यो वै विवेचनाशक्तिं पुण्यस्य किल्विषस्य च ।
नरेषु निदधावीशः पुण्याचाराय चोदयन् ॥२८॥

पुण्यस्य सौष्ठवं चापि तथा पापस्य दौष्ठवं ।
नरान्तःस्थितया वाण्या स्फुटवाचा ह्यशिक्षयत् ॥२९॥

यश्च स्वकीयदासानां द्वारा शासितृभूभृतां ।
करोत्यप्यैहिके लोके दृढं दण्डं कुकर्मणां ॥३०॥

स स्वयं ह्यीश्वरः पुण्यः किं नस्याद्विमलात्मकः ।
प्रसन्नः सुक्रियाभिश्चामुत्रकिल्विषदण्डदः ॥३१॥

सर्वव्यापीश्वरोऽस्तीति ज्ञायते सत्यमार्गकैः ।
तथापि सर्वसृष्टेभ्यः स भिन्नोऽस्ति समन्ततः ॥३२॥

आत्मभ्यः किलमर्त्यानां पदार्थेभ्यस्तथैव च ।
भिन्नः सन्नीश्वरो भिन्नस्तथा तिष्ठति संततं ॥३३॥

नवा तस्मिन् किलानन्तेऽनिर्वाच्यौजःसमन्विते ।
नराणामपि सिद्धानां लयः शक्यः कदाचन ॥३४॥

इति मतपरीक्षायामीश्वरगुणवर्णनं नाम प्रथमो
ऽध्यायः ॥१॥

॥ शिष्य उवाच ॥

ईशो ऽस्ति सर्वतः सिद्धः वरधीमान् दयामयः ।
विभुस्त्रष्टा जगच्छास्ता सर्वभूतार्च्चनार्हकः ॥१॥

एवं ज्ञात्वा नरैः सर्वैर्यथार्हं तस्य पूजनं ॥
किं स्वयं शक्यते कर्तुं नवेति भक्तमानसैः ॥२॥

॥ गुरुरुवाच ॥

ख्यातानां भिन्नदेशेषु मतभेदाद्विपश्चितां ।
नृबुद्धिर्दुर्बला भाति याथार्थ्यनिर्णयाक्षमा ॥३॥

तस्मान्नृबुद्धिदौर्बल्यादज्ञानभ्रांतिसंयुतात् ।
स्वयं तैरीश्वरो विद्या सम्यग्गंतुं न शक्यते ॥४॥

विचाराच्चैव धर्म्माणां विविधानामसंख्यकैः ।
मानवैर्भिन्नवंशीयैराश्रितानां बुधैरपि ॥५॥

अपूतरीतियुक्तानां विभोःसत्ताऽपवादिनां ।
ईश्वरेतरभूतौघपूजार्हत्वोपदेशिनां ॥६॥

सद्धर्मो विमलाचार ईशयोग्यार्चनान्वितः ।
बुध्या न शक्यते प्राप्तुं विपश्चिद्भिर्नरैरपि ॥७॥

सद्धर्माल्लभ्यते मुक्तिर्नित्यश्रेयःसमन्विता ।
हीनानां पुण्यधर्मात्तु मुक्तिर्भात्यतिदुर्लभा ॥८॥

अतो यथार्थधर्म्मस्य प्राप्त्यै ह्वीशसहायता ।
अतीवावश्यिका ज्ञेया मुक्तिमार्गार्थिभिर्नरैः ॥९॥

एवं मत्वा च देशेषु नरा भिन्नेषु वंचकाः ।
भ्राम्ता वा शास्त्रमीशं नोऽर्पितमित्यवदन् किल ॥१०॥

स्वमिथ्योक्त्या च धर्म्मास्ते कौशलेन भ्रमेण वा ।
अपुण्यान् स्थापयामासुरीशेन घृणितांस्ततः ॥११॥

ईदृशासत्यशास्त्राणां नरकल्पनतस्तदा ।
मिथ्यात्मकानि सर्वाणीतिचेत्कोऽपि तु तर्कयेत् ॥१२॥

नैवं यतो हि यद्वस्तु गण्यते बहुमूल्यकं ।
तस्यानुरूपवस्त्वन्यत्कल्पयंति नराःसदा ॥१३॥

अज्ञानं विश्वमर्त्यानामीशस्य करुणां बुधाः ।
ध्यायंत ऐश्वरीं नीतिं प्रतीक्षंते मुमुक्षवः ॥१४॥

ईशः किमैहिकसुखमाशुनाश्यं प्रदाय नः ।
परमार्थस्य लाभाय नाध्वानं दर्शयिष्यति ॥१५॥

इतिमतपरीक्षायामैशनीत्यावश्यकता नाम द्वितीयो
ऽध्यायः ॥२॥

——oooo——

॥ शिष्य उवाच ॥

ऐशं स्वनीतये शास्त्रमपेक्ष्यं यदि मानवैः ॥
तदा कैर्ज्ञायते चिह्नैः सत्यं शास्त्रं तथाऽनृतं ॥१॥

॥ गुरुरुवाच ॥

साधुपृष्टं त्वया शिष्य संदेहच्छित्तये यतः ।
चिह्नानीशेन देयानीत्येव विश्वसिमो वयं ॥२॥

चमत्कारक्रियाशक्तिः स्थिता शास्त्रप्रवर्त्तके ।
प्रथमं सत्यशास्त्रस्य चिह्नमस्तीति भाति मे ॥३॥

ईश्वरेणेदृशी शक्तिः शास्त्रयाथार्थ्यसाक्ष्यदा ।
स्वपुण्यशास्त्रवक्तृभ्यो दीयतेऽद्भुतसिद्धये ।४॥

दयालुना न तेनैव भ्रांतये शरलात्मनां ।
सत्यमार्गार्थिसाधूनां समर्प्या वंचकेषु सा ॥५॥

अतो ये ये नराः पूर्वमासन्नद्भुतकारिणः ॥
मृतानां जीवदातारो भविष्यद्वाचिनोऽपिच ॥६॥

ऐशं मर्त्योपदेशाय शास्त्रं तेषु समर्पितं ।
इति तत्स्थेन चिह्नेन ज्ञायते सुस्फुटेन हि ॥७॥

एतादृक् शक्तिहीनास्तु ये ये शास्त्रप्रवर्तकाः ।
स्वबुद्ध्या कल्पितं शास्त्रमैशमेव वदन्ति ह ॥८॥

आश्चर्य्यकर्मशक्त्युत्थप्रमाणाभावतो हि ते ।
अशेषा वंचका ज्ञेयाः स्वयं वा भ्रान्तमानसाः ॥९॥

यतो यमीश्वरः कंचिच्छिक्षार्थं चोदयेन्नृणां ।
विशेषलक्षणं स्पष्टं तस्मिन्नेव निधास्यति ॥१०॥

तथैव भाविमर्त्यानामपि प्रत्ययहेतवे ।
आश्चर्य्यकर्मवृत्तान्तः समर्प्यः पुस्तकेषु सः ॥११॥

ननु चेत्तर्हि तत्पश्चादतीते समये चिरे ।
प्राचीनकर्मणां वार्त्तां कथं निश्चिनुयुर्नराः ॥१२॥

किं नान्तःकरणे तेषां दृढो जायेत संशयः ।
आश्चर्य्याःशृणुमो या या महाचार्य्यैः कृताःक्रियाः ॥१३॥

न साक्षात्साक्षिणां भूतास्ता न ग्रंथे समर्पिताः ॥१४॥
स्वकीयगौरवार्थाय ह्याचार्य्यैः कल्पितास्त्विति ।

प्रवृत्तो मानुषः कोऽपि स्वसांसारिककर्मसु ।
किमप्यपूर्वकं शृण्वन् प्रमाणं याचते यथा ॥१५॥

तथैव सुपुराणानां वार्त्तामद्भुतकर्मणां ॥
शृण्वन्तो वै परीक्षन्तां सा प्रमाणयुता नवा ॥१६॥

यद्यत्परम्पराप्राप्तं ग्रंथे चैव समर्पितं ।
तदप्यत्यनृतं भातुं कल्पितं चैव शङ्कयात् ॥१७॥

यतोऽनेकेषु वंशेषु प्राचीने समये स्थिते ।
महत्त्वं वर्द्धयामासुर्वीराणां स्तुतिपाठकाः ॥१८॥

स्वकीयकविताशक्त्या चातीतकालकर्मसु ।
सत्येष्वल्पेष्वनेकानि कल्पितानि ह्यमिश्रयन् ॥१९॥

तद्धेतोश्चातिप्राचीनाः कीर्त्तिता अद्भुताः क्रियाः ।
कथाश्च सुरदैत्यानां भान्ति संशययोग्यकाः ॥२०॥

एतास्त्वसंस्कृता मर्त्याः सत्यासत्याविवेकिनः ।
अद्भुतानां कथाः श्रुत्वाशुगृह्णन्त्यपरीक्षिताः ॥२१॥

परं त्वर्हन्ति धीमन्तस्तर्कशक्तिसमन्विताः ।
पूर्वाश्चर्य्यक्रियाकीर्त्तेः प्रमाणानि परीक्षितुं ॥२२॥

कस्याप्यद्यतने काले नराश्चाध्यक्रियाः किल ।
कुत्रापि जगतीमध्ये न भान्तीक्षणगोचराः ॥२३॥

न क्वाप्याविष्कृतो देव इदानीं भूमिमण्डले ।
भीमैर्विस्मापयत्यस्मान् स्वचमत्कारकर्मभिः ॥२४॥

पुरा चाविष्कृतिर्भूता पृथिव्यां दैवकर्मणां ।
नवेति वै परीक्षन्तां पण्डिताः सत्यतत्पराः ॥२५॥

द्वितीयं सत्यशास्त्रस्य प्रमाणं श्रेष्ठतेति वै ।
ईशः पुण्यात्मकः पुण्यं शास्त्रं दास्यत्यसंशयं ॥२६॥

अतो येष्वेव शास्त्रेषु न निषिद्धाः समन्ततः ।
नराणां कुक्रियाः सर्वाः कुचिन्ताश्चापि रागजाः ॥२७॥

येषु वा दुष्टकर्माणि देवानां ह्रीकरास्तथा ।
वर्ण्यन्ते वै तदर्थेतृकामादिवोदिकाः कथाः ॥२८॥

शास्त्राणि तानि भ्रष्टात्मनृधीजानीति तर्क्यते ।
नोत्पन्नानीश्वरात्पुण्याद्धृणिताखिलपापकात् ॥२९॥

पुनर्यमीश्वरं सर्वे सर्वज्ञमात्मरूपकं ।
अनन्तशक्तिमन्तं च हीनं पापत्वादपि ॥३०॥

मन्यन्ते ज्ञानिनोऽसौ चेत् कस्मिंश्चित् शास्त्र ईश्वरः ।
वर्ण्येत नरवत्कृष्टः कुभावोऽबुद्धिमानिति ॥३१॥

तदेव भ्रामकं शास्त्रं परमेशापवादकं ।
नराज्ञानोत्थितं ज्ञेयं नतु दैवं कदाचन ॥३२॥

तृतीयं सत्यशास्त्रस्य लक्षणं तु विशेषकं ।
सामान्यतेति भातीह विश्वेषां ग्राह्यिका नृणां ॥३३॥

कर्त्तैकोऽस्त्येव सर्वेषां भूमिमण्डलवासिनां ।
अन्योन्यभिन्नभाषाणां भिन्नरीत्यादिधारिणां ॥३४॥

नृजातेश्चापि सर्वस्याः समानः प्रतिभाति ह ।
स्वभावो बुद्धिरागादियुक्तस्तुल्यार्थतत्परः ॥३५॥

अतो भूसर्ववंशीयनृस्वभावसमत्वतः ।
एकत्वमेव धर्मस्य युज्यते नत्वनेकता ॥३६॥

ततश्च सकलैर्ग्राह्यं शास्त्रमेकं विमुक्तिदं ।
ईशेनासंशयं देयमिति धीरैः प्रतीक्ष्यते ॥३७॥

शास्त्रं यद्विद्यते वंशविशेषार्थे तु कल्पितं ।
तन्नैवेश्वरतो जातं भाति किंतु नृबुद्धितः ॥३८॥

इति मतपरीक्षायां सत्यधर्मलक्षणवर्णनं नाम तृतीयो ऽध्यायः ॥ ३ ॥

—oooo—

॥ शिष्य उवाच ॥

तच्चिह्नत्रयसंयुक्तं यच्छास्त्रं प्रतिभाति ह ।
यदि तत् केवलं सत्यं भवितुं शक्नुयाद्गुरो ॥१॥

तच्चिह्नहीनशास्त्राणि सर्वाणि तदभावतः ।
ज्ञायन्ते त्वैश्वरोत्पत्तिहीनानि मोहजानि च ॥२॥

तदा तैरंकितं चिह्नैः तथा सिद्धांतरूपकं ।
जानासि कतमं शास्त्रं गुरो मे विस्तराद्वद ॥३॥

॥ गुरुरुवाच ॥

खृष्टीयसंज्ञको धर्म्मो येषूखृष्टप्रवर्त्तितः ।
यथार्थ ऐश्वरश्चैव भाति मे शिष्य केवलः ॥४॥

प्रामाण्यात्खल्वसौ धर्म्मः सम्पन्नाच्चापि सौष्ठवात् ।
विश्वस्यो विद्यते सम्यङ्‌ मर्त्यैः सर्वैर्मुमुक्षुभिः ॥५॥

आश्चर्य्यकर्मयुक्तःसोऽतीवपुण्यात्मकस्तथा ।
अशेषमानवैर्ग्राह्य इति चिह्नत्रयान्वितः ॥६॥

यहूद्यसंज्ञके देशे पारसीकस्य पश्चिमे ।
प्रागासन् भव्यवक्तारः पुण्या ईश्वरशिक्षिताः ॥७॥

ते स्वकालीनमर्त्यानां भाविनां चोपदिष्टये ।
भविष्यत्कर्म्मणां वार्त्तां प्रोचुरैश्वरशक्तितः ॥८॥

तद्भव्यवक्तृवाक्येषु प्राक् श्रीखृष्टावतारतः ।
प्रोक्तेषु सुचिरं कालं स्मृतये लिखितेषु च ॥९॥

भाविखृष्टावताराद्विवृत्तान्तोऽद्यापि विद्यते ।
ईशशक्त्यार्पितस्तत्र पश्चात्पूर्णोऽभवद्यथा ॥१०॥

यदा त्ववातरत् खृष्टो नररूपी विभोःसुतः ।
कन्याया विमलायाः स जातः शक्त्या सदात्मनः ॥११॥

आविश्चकार मर्त्यानां मोक्ता सः शक्तिमांस्तदा ।
अतीवाश्चर्य्यकर्मौघमसाध्यं नरशक्तितः ॥१२॥

रोगार्त्तान् वाक्यमात्रेण सद्यः सुस्थीचकार सः ।
भूतानामुपसर्गं च प्रददाम समन्ततः ॥१३॥

मृतांश्च जीवयामास स्वयं चैव दुरात्मभिः ।
हतः पश्चात्तृतीये ऽह्नि पुनर्जीवन् बभौ भुवि ॥१४॥

अन्ते तु स्वर्गमारोहत् स्वकीयशिष्यगोचरे ।
शक्तिं चैतादृशीं स्वीयप्रेरितेषु समार्पयत् ॥१५॥

खृष्टस्य चरितं शिष्य विस्तरात्तु यदीच्छसि ।
ज्ञातुं श्रीखृष्टसंगीताख्यकाव्यं पठ्यतां त्वया ॥१६॥

॥ शिष्य उवाच ॥

एतानि सर्वकर्माणि कृतानि तत्वतो न वा ।
श्रीखृष्टेनेति विज्ञातुं निश्चयं शक्नुयां कथं ॥१७॥

क्रियाणामद्भुतानां हि कीर्त्तितानां नरैरपि ।
कर्त्तव्यास्त्यप्रमाणानामप्रतीतिर्विवेकिभिः ॥१८॥

खृष्टेन प्रोक्तकर्माणि कृतानि निश्चिनोषि कैः ।
प्रमाणैर्ज्ञातुमिच्छामि तर्हि मामुपदेशय ॥१९॥

॥ गुरुरुवाच ॥

कृतानि साक्षिणां साक्षाद्बहूनां निजवैरिणां ।
एतानि प्रोक्तकर्माणि खृष्टेनाद्भुतकर्मणा ॥२०॥

न तस्य रिपवो दक्षा ईर्ष्ययापि तदीप्सुकाः ।
आश्चर्य्याः सुक्रियास्तस्य निह्नोतुं खल्वशक्नुवन् ॥२१॥

तत्स्वर्गारोहणात्पश्चादतीते समये चिरे ।
चरित्रं नृमहामोक्तुः पुस्तकेषु समार्प्यत ॥२२॥

प्रबन्धानां ततस्तेषां संसारे खृष्टवैरिणि ।
सद्यःप्रचारितानां च खण्डनं क्वापि नो कृतं ॥२३॥

ततश्चाखण्डनीयानि तद्विपक्षोद्यमादपि ।
तान्येव जगतीमध्ये व्यस्तारिषत सर्वतः ॥२४॥

यदा ह्यवातरत्खृष्टस्तदा तत्समयाच्च प्राक् ।
प्रत्यग् दिग्वासिनो मर्त्याः शिष्टा आसन् नवर्वराः ॥२५॥

रौम्याणां यवनानां च पाण्डित्यं लोकविश्रुतं ।
प्रबन्धाध्ययनाज्ज्ञाति नानाविद्यासमन्वितं ॥२६॥

मते च विस्तृते नूत्ने खृष्टीये तत्परीक्षणं ।
प्रचक्रे पण्डितैः सत्यासत्यजिज्ञासुभिर्दृढं ॥२७॥

तच्छास्त्रे चाभविष्यच्चेन्मिथ्यावाक्यलवोऽपि वै ।
तद्द्वैतैर्वैरिभिर्दक्षैः स नास्थास्यदखण्डितः ॥२८॥

श्रीखृष्टस्यानुगा आद्याःसत्यत्वात्तन्मतस्य ह ।
तस्यावलंबिनोऽभूवन्निति स्पष्टं प्रकाशते ॥२९॥

यतः प्रवर्त्तिते तस्मिन्मते दौष्टवनिन्दके ।
पीडनं सेहिरेऽत्यंतं तस्य पूर्वेऽनुयायिनः ॥३०॥

ऐहिकं ये सुखं त्यक्त्वा स्वेच्छातः सोढकष्टकाः ।
सुक्रूरदण्डभाजोऽपि मृत्युभीत्यपराजिताः ॥३१॥

तन्मतालिंगनं कृत्वा बलात्काराज्ञ तत्यजुः
स्वधर्म्ममीशप्रत्तं ते मेनिरे नात्र संशयः ॥३२॥

असत्यपक्षपातात्को मानुषो वातुलादृते ।
करिष्यत्यैहिकत्यागं कष्टसहनसंयुतं ॥३३॥

अतोऽमुत्र सुखाशातो निर्म्मलैः किल खार्ष्टैकैः ।
स एवालम्बिनो धर्म्मो दृढं च पीडितैर्धृतः ॥३४॥

मुक्तये कश्च धीमान् वै धर्म्मं क्लेशसमन्वितं ।
आलिंगेदात्मभद्रेच्छुरपरीक्षिततत्वकः ॥३५॥

प्राचीनास्ते चरित्रं हि साश्चर्य्यकर्मसंघकं ।
खृष्टस्य निश्चितं ज्ञात्वाऽनुजग्मुर्दृढभक्तितः ॥३६॥

तस्मात्खृष्टीयशास्त्रोक्तनिखिलाद्भुतकर्मणां ।
आदौ परीक्षितानां न कर्त्तव्यः शिष्य संशयः ॥३७॥

॥ शिष्य उवाच ॥

श्रीखृष्टवर्णका ग्रंथा कृताः सद्योऽरिगोचरे ।
नत्वतीते चिरे काले इतिनिर्णीयते कथं ॥३८॥

॥ गुरुरुवाच ॥

वैक्रमस्य शकस्यादावपस्मारः कृपान्वितः
खृष्टस्य भूतले भूतः स्वर्गं चारोहणं पुनः ॥३९॥

ततः सन्मोक्तृवृत्तांतो नृभिः पृष्टः कुतूहलात् ।
ग्रंथेस्वल्पे गते काले नतु दीर्घे समाप्यत ॥४०॥

प्रमाणं चापरग्रंथावली तत्समयावधि ।
आरब्धा ह्यद्यपर्य्यंतं च परम्परया तता ॥४१॥

खृष्टीयेभ्यश्च शास्त्रेभ्य उद्धृतानि वचांसि ह ।
प्राप्यन्ते तेषु भिन्नेषु ग्रंथेषु ह्यादितः किल ॥४२॥

तद्ग्रंथेष्वावलीबद्धेष्ववतारणिकौघतः ।
तत्सर्वापेक्षया पूर्वं सच्छास्त्रं भाति खार्ष्टकं ॥४३॥

ग्रंथानां चैकशस्तेषां क्रमेण प्रथमावधि ।
सर्वेषां रचनाकालः सुनिर्णीतोऽभवद्बुधैः ॥४४॥

ग्रंथानां तर्ह्यमीषां वै श्रीख्रीष्टसमयादपि ।
ततानामद्यपर्य्यन्तं पारंपर्य्यानुसारतः ॥४५॥

अगुप्तोत्पत्तिकालानां कृतानां शरलात्मभिः ।
विपक्षाखंडितानां च विश्वस्तानां तथादितः ॥४६॥

वर्णनाज्ज्ञायते स्पष्टादतिविस्तरसंयुतात् ।
शास्त्रस्य रचनाकालः ख्रीष्टीयस्यातिनिश्चितः ॥४७॥

॥ शिष्य उवाच ॥

श्रीख्रीष्टाश्चर्य्यकर्माणि कृतानि वैरिगोचरे ।
इत्यादेर्भवतस्तर्काद्विश्वासो जायते मम ॥४८॥

धर्मस्य त्वधुना सारं तेन प्रवर्त्तितस्य मे ।
विज्ञाप्य विद्यते श्रेष्ठः स नवेति प्रकाशय ॥४९॥

॥ गुरुरुवाच ॥

द्वितीयं लक्षणं यत्ते सत्यधर्मविशेषकं ।
प्रोचेऽहं तत्स्फुटं भाति मते ख्रीष्टप्रचारिते ॥५०

पुण्याभ्यस्तत्स्थिताज्ञाभ्यस्तदर्थस्यामलत्वतः ।
उत्पत्तिरैश्वरी भाति ख्रीष्टकस्य मतस्य ह ॥५१॥

एतादृक् सत्यधीमत्तापुण्यसत्तासमन्वितं ।
न बभौ नरधीजातशास्त्रं किंचित्कदाचन ॥५२॥

पुण्यात्मा हि स्वयं ख्रीष्टः नृपापभावहीनकः ।
चकार सर्वदा पुण्यं तथाऽन्यानादिदेश च ॥५३॥

कामलोभाभिमानादिभ्रष्टरागविवर्जितः ।
दीनानां रोगिणां चैव विपद्वन्धान्मुमोच सः ॥५४॥

मर्त्यांश्च भ्रमितान्पश्यन् सत्यधर्मपराङ्मुखान् ।
विस्मृतपरलोकांश्च मुक्तिमार्गे निनाय ह ॥५५॥

ईशस्य हृत्स्थितं प्रेम पूजारीतिसमन्वितं ।
भीयुक्तं मानवैः कृत्यमिति नित्यमुपादिशत् ॥५६॥

तेनैव मुख्यधर्म्मेण सार्द्धमन्यास्तथा क्रियाः ।
कृपां परोपकारं च सत्यमार्जवमेव च ॥५७॥

निर्वेदं मार्दवं चापि कामलोभादिवर्जनं ।
इत्याद्या आदिशत्ख्रीष्टो निखिलाङ्गोनिषेधकः ॥५८॥

॥ शिष्य उवाच ॥

ऐश्वरज्ञानसंपन्ना आचार्य्या भव्यवाचिनः ।
ते प्रोक्ता भवता किं न नरधर्मानुपादिशन् ॥५९॥

तेषां द्वारेश्वरादेशाश्चेत्प्रोच्यंत नृगोचरे ।
तदा ज्ञेयं कथं खृष्टावतारस्य प्रयोजनं ॥६०॥

॥ गुरूरुवाच ॥

न पुण्यकृतिमात्रार्थे नच मर्त्योपदिष्टये ।
भूमाववातरत्खृष्ट ईशपुत्रो हि नाकतः ॥६१॥

दृढदण्डार्हकानान्तु स्वीयकिल्विषहेतुतः ।
नराणामपि मुक्त्यै सोऽवततार विशेषतः ॥६२॥

इदानीं सत्यशास्त्रस्य तृतीयं वच्मि लक्षणं ।
सामान्यमिति खृष्टीये धर्मे सम्यक् प्रदर्शितं ॥६३॥

यतस्तन्मतशास्त्रोक्ता आदेशाः सर्ववंशकैः ।
विश्वोर्वीवासिभिर्मर्त्यैः पालनीया भवन्ति ह ॥६४॥

न कोऽपि मानवो जातिविशेषादिकहेतुना ।
तन्मतालम्बनोत्पन्नफलानंशो भवत्यपि ॥६५॥

नृजातिर्निखिला दीना मर्त्यामकलंकतः ।
सामान्यान्मलिनीभूता दण्ड्या दंडाद्बिभेति ह ॥६६॥

विशुद्ध्यै तत्कलंकस्य तदुद्धृत्यै च दण्डतः ।
श्रीखृष्टो नृमहाभ्रातावतीर्णः प्राग्बभौ भुवि ॥६७॥

त्राणस्य मोक्षसिद्धस्य मर्त्या निखिलवंशजाः ।
यवना भारतीयाद्या भूचतुर्दिक्स्थितास्समे ॥६८॥

संस्कृता वर्वराश्चैव विपश्चिदविपश्चितः ।
प्रसादाच्छक्नुयुश्चास्य भवितुं सहभागिनः ॥६९॥

॥ शिष्य उवाच ॥

सशिष्येनैव खृष्टेन मते पूर्वं प्रचारिते ।
विशेषविषयाः सन्ति के ध्येयास्त्राणलिप्सुकैः ॥७०॥

॥ गुरुरुवाच ॥

मंतव्या प्रथमं शिष्य सर्वेषां भ्रष्टता नृणां ।
ईशाज्ञोल्लंघकादाद्यान्नुः परम्परयागता ॥७१॥

नृभ्रष्टभावतो नित्यं जन्यते ह्यघसंचयः ।
दण्डार्ह इति शास्त्रोक्त इह लोके तथा परे ॥७२॥

नृरूपं दयया धृत्वेशसूनुः स्वयमीश्वरः ।
येषूख्रृष्ट इति ख्यातः शुभशिक्षां प्रदाय च ॥७३॥

यहूदीयैरीर्ष्यया शेषे हतो नृणामघस्य सः ।
स्वपुण्यदेहयज्ञेन प्रायश्चित्तं चकार ह ॥७४॥

तत्प्रायश्चित्तमात्रार्थमीश्वरेणानुतापिनां ।
हेशप्रसादसंयुक्ता क्रियते कल्मषक्षमा ॥७५॥

यःकोऽपि स्वीयपापार्थेऽनुतापं शोकसंयुतं ।
कुर्य्यात्सुशरलः ख्रृष्टप्रायश्चित्ते च विश्वसन् ॥७६॥

स एव मोक्ष्यते पापैः साहाय्याच्च सदात्मनः ।
आमृत्योश्चेत्स्थिरस्तिष्ठेत्स्वर्गं शेषे स यास्यति ॥७७॥

यावत्तु ह्यत्र संसारे जीवेत्तावदघोद्भवैः ।
क्लेशैर्न मोक्ष्यते सम्यक् खल्वसौ धार्मिकोऽपि सन् ॥७८॥

यतः श्रद्धाद्यो दुःखैः परीक्ष्यन्ते गुणास्समे ।
संसारसम्प्यदासक्तिर्दृढा च प्रतिवध्यते ॥७९॥

ईशं प्रत्यमलं प्रेम हृत्स्थं भीतिसमन्वितं ।
दयां च कुरुते भद्रो यो नृन्प्रति निरन्तरं ॥८०॥

ईशदत्तैहिकसुखमितभोक्ताकृतज्ञकः ।
न क्षुद्रविषयासक्त्या दृढया विस्मृतेश्वरः ॥८१॥

न स्वस्य भ्रष्टभावस्य शक्तौ किंतु सदात्मना ।
प्रदत्ते विश्वसन्नित्यं प्रसादे पुण्यशक्तिदे ॥८२॥

सन्मोक्तृघातहेतुभ्योऽघेभ्यो यश्च पराङ्मुखः ।
विहातुं कल्मषं कामलोभक्रोधादि चेष्टते ॥८३॥

धर्म्यो दीनात्मको भक्तः स्वर्गनित्यसुखेप्सुकः ।
स एव वास्तवो ज्ञेय ईशेष्टः ख्रृष्टसेवकः ॥८४॥

॥ शिष्य उवाच ॥

सदात्मेति त्वया प्रोक्तो मया को ज्ञेय एव सः ।
ख्रृष्टश्च कथमीशस्य पुत्रो ख्यातोऽस्ति हेगुरो ॥८५॥

॥ गुरूरुवाच ॥

सुगूढविषये प्रश्नः शिष्यात्र क्रियते त्वया ।
नृबुद्ध्याऽनवगंतव्येयच्छास्त्रोक्तं तु तच्छृणु ॥८६॥

पिता पुत्रः सदात्माचेति ज्ञातव्यस्त्रिरूपकः ।
एक एवेश्वरो नित्यं विद्यमानः सनातनः ॥८७॥

पिता खल्वीश्वरोऽस्त्येवं पुत्रो विद्यत ईश्वरः ।
सदात्मा चेश्वरोऽस्त्यत्र न कृत्यः संशयो बुधैः ॥८८॥

न त्रयस्त्वीश्वरा ज्ञेया एक ईशस्तु केवलं ।
अनादिरविकार्य्यश्चानिर्वाच्यश्चात्मरूपकः ॥८९

स्वपुत्रं प्रेरयामास नरमुक्त्यै पितेश्वरः ।
पुत्रस्त्ववातरद्भूमौ प्रायश्चित्तं ससाध च ॥९०॥

सदात्मा स्वात्प्रसादाच्च पुत्रमृत्युफलाच्छुभात् ।
नृणां विश्वासिनां हृन्दि पापात्पुण्यीकरोति ह ॥९१॥

अतोऽत्यंतदयाहेतोः पितृपुत्रसदात्मनां ।
आनन्दप्रेमसंयुक्ता स्तुतिः कार्य्या निरन्तरं ॥९२॥

॥ शिष्य उवाच ॥

मुक्तिः ख्रृष्टीयशास्त्रोक्ता या सद्भिरतिकांक्षिता ।
संस्थिता स्वर्गलोके च सा मे बोध्यास्ति कीदृशी ॥९३॥

॥ गुरूरुवाच ॥

मर्त्यैः संसारकारास्थैः पापान्धीभूतमानसैः ।
न स्पष्टं शक्यते बोद्धुं तत्सुखं पारलौकिकं ॥९४॥

या त्वव्यक्तार्थकाच्छान्ताह्लादार्त्ती शिष्यानुभूयते ।
तामेव शक्नुयां वक्तुं त्वद्बुद्धिद्योतनाय ह ॥९५॥

सन्तः ख्रष्टीयशास्त्रोक्तस्वर्गलोकं गता नराः ।
स्थास्यन्ति सततं पुण्याः सम्यङ्निर्मलचेतसः ॥९६॥

तेषु सत्तमलोकेषु शुभानन्दान्वितेषु न ।
प्रवेष्टुं शक्नुयाच्छोको दुःखसंघश्च पापजः ॥९७॥

यश्च वै प्राप्स्यते तत्रानन्दः स ईशकर्मणां ।
दृष्टेर्भूयो विभोस्तेजोध्यानाच्च प्रेमसंयुतात् ॥९८॥

न तत्र कांक्षिता कोऽपि कामजानि सुखानि ह ।
शारीरिकाण्यपूतानि तेभ्यः सत्तरधर्मभाक् ॥९९॥

इत्यादिफलसंयुक्ता स्वर्ग्या मुक्तिरनन्तिका ।
श्रीख्रष्टस्यार्जिता मृत्या याच्यतां दृढमीश्वरात् ॥१००॥

अतिनन्देप्सुकस्यैव सा हि कांक्षा नरात्मनः ।
अतृप्तस्यैहिकैरर्थैस्तर्पितुं शक्नुयाद्ध्रुवं ॥१०१॥

न मुक्तिर्गम्यते यैस्तु तेषां दण्डो भयंकरः ।
भविता नरके घोरे ताडितानां सनातनं ॥१०२॥

अतो हि खृष्टस्य मतावलम्बी
स्वपापहेतोश्च कृतानुतापः ।

नृमोक्षयज्ञस्य फलानि दातुं
पापक्षमादीनि किलार्थयेशं ॥१०३॥

इतिमतपरीक्षायां खृष्टीयमतप्रमाणप्रदर्शनं
नाम चतुर्थोऽध्यायः ॥४॥

—oooo—

॥ शिष्य उवाच ॥

ऋषीत्याख्यैःकिलोक्तानां पुण्यानां सर्वभारते ।
मतानां पूजितानां च सुदीर्घसमयावधि ॥१॥

मयाप्यालम्बितानां च बाल्यकालान्निरन्तरं ।
वेदस्मृत्यादिशास्त्राणां विषये वक्षि किं गुरो ॥२॥

॥ गुरुरुवाच ॥

यं तत्सम्बन्धिनं तर्कं वक्ष्येऽहं सुविचार्य्य ते ।
तं शृण्व पक्षपातात्मा सत्यग्रहणशीलकः ॥३॥

अशेषा मानुषाः प्रायो विद्यन्ते पक्षपातिनः ।
स्वशैशवावधीष्टेषु विषयेषु रता दृढं ॥४॥

यस्तु वै सत्यमात्रार्थी सर्वस्वार्थानपेक्षया ।
स एव केवलः शिष्य बुधोऽस्ति वास्तवः स्मृतः ॥५॥

अतस्त्वत्पृष्टविषये वक्ष्यमाणमृतार्थिना ।
मया संत्यक्तधीस्वच्छदृष्टिबाधो गृहाण वै ॥६॥

भारतीयेषु वेदादिशास्त्रेषु लक्षणत्रयं ।
प्राक्प्रोक्तं प्राप्यते किंवा नेति देक्ष्यामि साम्प्रतं ॥७॥

प्रमाणं प्रथमं सत्यशास्त्रस्याद्भुतसाधिका ।
शक्तिः प्रवर्त्तके तस्य स्थिता स्पष्टेत्यवादिषं ॥८॥

इत्यादिलक्षणाभावान्मतानि यानि भारते ।
शास्त्राणि तानि नैशानि ज्ञातव्यानीति मे मतिः ॥९॥

परम्परागता ख्यातिर्या व्यक्ता काव्यरूपका ।
चित्रवृत्तान्तसंयुक्ता सुरदैत्यकथान्विता ॥१०॥

मुग्धशिष्यादिविश्वस्ता सा बुधेभ्यो न रोचते ।
अतीवासंभवा बुद्धा मोहजाज्ञानकल्पिता ॥११॥

इदानीं भूतले कोऽपि ह्याश्चर्य्यकर्मशक्तिभृत् ।
न देवो न नरो भाति दैवशास्त्रप्रवर्त्तकः ॥१२॥

क्रिया यद्यद्भुताः सर्वा विलुप्ता भूमिमंडलात् ।
कुत्राप्याविस्कृता अद्य नरसाक्षान्न भान्ति ह ॥१३॥

तदा या याः क्रिया दैन्यः ख्यायन्तेऽपि पुराकृताः ।
ता वै प्रमाणहीनाश्चेन्न प्रत्येया विवेकिभिः ॥१४॥

या याश्च साक्षिणां साक्षादक्रियंताऽद्भुताःक्रियाः ।
ग्रंथेषु चार्पिताः सद्यः संसारे च प्रकाशिताः ॥१५॥

कर्त्तव्या केवलं तासां प्रतीतिः किल तार्किकैः ।
तत्वजिज्ञासुभिर्दक्षैः सत्यासत्यपरीक्षकैः ॥१६॥

ग्रंथेषु नार्पिताः पूर्वं वेदा वै श्रुतिरूपकाः ।
आसन्परम्पराप्राप्ता अनिर्णीतोत्तिकालकाः ॥१७॥

पश्चातु वैदिका मंत्राः सर्वे पूर्वमसंचिताः ।
व्यासेन समगृह्यंत व्यरच्यंत क्रमात्तथा ॥१८॥

आदौ यैः प्रोदिता मंत्राः पश्चाद्वा यैर्बुधैश्चिताः ।
तेषां वै सुस्फुटा वार्त्ता नास्माभिर्गम्यतेऽधुना ॥१९॥

तथा स्मृतिपुराणादिशास्त्रीयग्रंथकारिणां ।
न भाति वास्तवा वार्त्ता तिमिरेण समावृता ॥२०॥

यतस्तद्वर्णका ग्रंथाः काव्यरूपकथान्विताः ।
अज्ञातरचनाकाला असंभाव्यर्थसंयुताः ॥२१॥

सत्यस्य लक्षणैर्हीनाः सम्यङ्मे प्रतिभान्ति ह ।
तत्स्थेषु चैव वाक्येषु रुचिर्नार्हति धीमतां ॥२२॥

अतोऽद्भुतक्रियाशक्तिः प्राचीनेष्वृषिषु स्थिता ।
दैवी वै सुष्ठु निश्चेतुं न शक्येत कदाचन ॥२३॥

प्रत्युतर्ष्यादिमर्त्येषु प्रोक्तेषु तेषु शिष्य मे ।
अभावो दैवशक्तेर्वै प्रतिभाति सुनिश्चितः ॥२४॥

यतो वै लक्षणं स्पष्टं सर्वसंशयनाशकं ।
यस्मिन् वै नार्पितं भाति मूढमानवमीलये ॥२५॥

तदेव शास्त्रमीशेन नादायीत्यनुमीयते ।
शास्त्रे विशेषचिह्नानि स्पष्टान्यर्पितुमिच्छता ॥२६॥

॥ शिष्य उवाच ॥

आदेः परम्पराप्राप्तो वेदादिशास्त्रसंचयः ।
इदानीं संमतो योऽस्ति सर्वभारतवासिभिः ॥२७॥

स एव नेश्वरो ज्ञेयो नृबुध्याकल्पितस्तु चेत् ।
तदादेः सोऽवपर्य्यन्तं तिष्ठत्यालम्बितः कथं ॥२८॥

॥ गुरुरुवाच ॥

नराः स्वभावतः सर्वे दैवचिंतान्विताः सदा ।
स्वकीयपापतस्त्रस्ताः परलोकभयाहताः ॥२९॥

पुरा चित्रार्थसंयुक्ता देवीदेवस्तवान्विताः ।
कथाः स्वगुरुभिः प्रोक्ता व्यस्त्रवसन्नपरीक्षिताः ॥३०॥

आचार्य्याश्च स्वयं भ्रांता इनेन्द्वाद्यैरमनुताः ।
वस्तुभिः परितः संस्थैः शोभातेजःसमन्वितैः ॥३१॥

आकाशमुज्ज्वलं दृष्ट्वा शुभ्रताराविचित्रितं ।
सागरं गुप्तपारं चाप्यद्रींश्च हिमशेखरान् ॥३२॥

सर्वत्र देवता भिन्ना भिन्नस्वालयवासिनीः ।
द्युस्थिताः पर्वतस्थाश्चाब्धिसंस्थाश्चाप्यकल्पयत् ॥३३॥

भूमौ पराक्रमं चैषां दृष्ट्वा दिव्यं प्रदर्शितं ।
नानोत्पत्त्यादिकार्य्याणां नित्यं कारणमद्भुतं ॥३४॥

गुणान् प्रकल्पयामासुर्भिन्नान् भिन्नान् परात्मनः ।
देवान् प्रभावसंयुक्तांस्तथा शक्तीश्च देविकाः ॥३५॥

एतस्य देवतौघस्य संमतस्य क्रमात्क्रमात् ।
स्वाचार्यैश्चोदिताश्चक्रुर्नराः पूजां सरीतिकां ॥३६॥

क्रमेण ववृधे तासां देवतानां किलैकशः ।
ख्यातिः स्वानुगतैर्भक्तैः स्तुतानामतियत्नतः ॥३७॥

तद्देवतौघभक्ताः स्वस्वदेवपक्षपातिनः ।
माहात्म्यवर्णिकास्तेषां कथाश्चित्रा अकल्पयन् ॥३८॥

एवं च देवतापूजा देशेषु यवनादिषु ।
ऐश्वसच्छास्त्रहीनेषु दृष्टा प्रागुदपद्यत ॥३९॥

यथा तत्र तथाऽत्रापि चोत्पन्ना भारतेऽर्चना ।
दुर्गाश्रीशिवविष्णूनां नानारूपविधारिणां ॥४०॥

कवयश्च तथा पूर्वे वाल्मीक्यादिपुरोगमाः ।
पुरा प्रसिद्धवीराणां स्तावकाः शौर्य्यगायकाः ॥४१॥

रामकृष्णादिभूपेषु शूरेषु बलवत्सु ह ।
काव्येन कल्पयामासुरवतारानवास्तवान् ॥४२॥

तौ ख्यातौ रामकृष्णौ तु देवौ नास्तां नरौ तु वै ।
शौर्य्यदाक्ष्यप्रतापाद्यैर्गुणैर्लोके प्रकीर्त्तितौ ॥४३॥

सर्वेषु वै पुराणेषु पुरावृत्तं यथातथं ।
न क्वापि वर्ण्यते शिष्यातीवासंगतमिश्रितं ॥४४॥

तथा रामायणे प्रोक्ताः प्रबन्धाः सहभारते ।
न सम्यग्वास्तवा ज्ञेयाः कविशक्त्या त्वलङ्कृताः ॥४५॥

सर्वे पुराणवक्तारो वाक्यानि स्वोदितानि वै ।
वदंत्यैतिह्यलब्धानि नतु प्रत्यक्षदर्शनात् ॥४६॥

अतो हि तत्र वर्ण्यन्ते याश्चित्रार्थाः कथाः समाः ।
तासां वै तात्त्विका वार्त्ता क्रमशो विस्मृताऽभवत् ॥४७॥

तथा च मूलवृत्तान्तोऽद्भुतपुञ्जसमावृतः ।
व्यकारि सर्वशः शिष्य सम्यङ्नष्टादिमार्थकः ॥४८॥

पुरा चासंस्कृताः सन्तो विद्याहीनाश्च मानवाः ।
विचाररहिताः प्रायः स्वाचार्य्योक्तिप्रपूजकाः ॥४९॥

वार्त्तां स्वगुरुभिः प्रोक्तां तावतीं किल मेनिरे ।
अत्यंतासंभवार्थां तां निराकृत्यां च पंडितैः ॥५०॥

॥ शिष्य उवाच ॥

शास्त्राणां भारतीयाणामाद्याः सर्वे प्रवर्तकाः ।
आश्चर्य्यशक्तिका नासन्निति स्पष्टा मतिस्तव ॥५१॥

द्वितीयं लक्षणं यत्तु सत्यशास्त्रविशेषकं ।
वेदादिसर्वशास्त्रेषु किं न तत्प्राप्यते गुरो ॥५२॥

॥ गुरुरुवाच ॥

ईशस्य विश्वपूज्यस्य ह्येकस्य विमलात्मनः ।
अनन्तशक्तियुक्तस्य सर्वज्ञस्य परस्य च ॥५३॥

दयालोरात्मरूपस्य ह्यपारधिषणावतः ।
अनादेरविकार्य्यस्य मर्त्यभावानिभस्य च ॥५४॥

मनुष्यसदृशद्वेषरागादिरहितात्मनः ।
भिन्नस्य सर्ववस्तुभ्यः सृष्टौ सर्वगतस्य तु ॥५५॥

संपूर्णविष्टपस्रष्टुस्तद्विश्वप्रतिपालिनः ।
स्वसृष्टजगतीशास्तुः पुण्यस्य समदर्शिनः ॥५६॥

यथार्थं वर्णनं यस्मिन् शास्त्रे भात्यमलात्मकं ।
तच्छास्त्रमैश्वरं ज्ञातुं शक्यते किल केवलं ॥५७॥

सुपुण्यगुणसंपन्न ईशो यैस्त्वपवाद्यते ।
तथा यत्पठनात्स्वांतं मलिनीक्रियते नृणां ॥५८॥

मनुष्यैस्तानि शास्त्राणि कृतानि भ्रष्टभावकैः ।
भांति न त्वीश्वरात्पुण्याज्ज्ञातान्यङ्गोनिषेधकात् ॥५९॥

शास्त्रेषु भारतीयेषु विद्यंते देवकर्म्मणां ।
अतीवापूतवृत्तांताः प्रबंधा बहवः खलु ॥६०॥

ब्रह्मविष्णुशिवादीनां कामाद्यालिप्तकर्मसु ।
अत्यंता भ्रष्टता भाति मर्त्यतुल्यमलान्विता ॥६१॥

बुधैर्ज्ञाता ध्रुवं सर्वाः पुराणाद्युदिताः कथाः ।
किं सारवित्तये तर्हि दृष्टान्तेन प्रयोजनं ॥६२॥

ईदृशः कुत्स्यकर्मौघो भ्रष्टांतःकरणोत्थितः ।
कर्त्तुं कदापि नेशेन शक्यते विमलात्मना ॥६३॥

न भांत्याविस्कृतास्तेषु चरित्रेष्वीश्वरक्रियाः ।
नृणां तु कल्पिता बुध्या नृपापप्रतिमूर्त्तयः ॥६४॥

शास्त्रेष्वादिश्यते पूजा शिवविष्ण्वोः सवेधसोः ।
भारते त्वधुना प्रायस्त्यज्यते ब्रह्मणोऽर्चना ॥६५॥

शैवाश्च वैष्णवाश्चैव विवदन्ते परस्परं ।
स्वस्वेष्टदेवताभक्ताः परेषां देवनिन्दकाः ॥६६॥

॥ तथाच भागवते ॥

भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाषंडिनस्ते भवन्तु सच्छास्त्रपरिपंथिनः ॥

मुमुक्षवो घोररूपान्हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजंति ह्यनसूयकाः ॥

॥ तथाच पद्मपुराणे ॥

यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
सममन्यैर्निरीक्षेत स पाषंडीभवेत्सदा ॥

किमत्र बहुनोक्तेन ब्राह्मणा येऽप्यवैष्णवाः ।
न स्पृष्टव्या न वक्तव्या न द्रष्टव्याः कदाचन ॥

ये ऽन्यदेवं परत्वेन वदन्ति ह्यज्ञानमोहिताः ।
नारायणाज्जगन्नाथात्ते वै पाषंडिनः स्मृताः ॥

वासुदेवं परित्यज्य येऽन्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥

विष्णुदर्शनमात्रेण शिवद्रोहः प्रजायते ।
शिवद्रोहान्न संदेहो नरकं यान्ति दारुणं ॥
तस्मात्तु विष्णुनामापि न वक्तव्यं कदाचन ॥

एष देवो महादेवो विज्ञेयस्तु महेश्वरः ।
न तस्मात्परमं किंचित्पदं समधिगम्यते ॥

विष्ण्वाद्युपासना वेदे ह्यादिमे मूलरूपके ।
न क्वाप्यादिश्यते शास्त्रे सूर्य्याग्न्याद्यर्चनान्विते ॥६७॥

वेदांश्च नाम मात्रार्थं पूजितान् सर्वभारते ।
विप्रा अधीयतेऽत्यल्पेऽपरशास्त्रपरायणाः ॥६८॥

एतैस्तु चरमैः शास्त्रैरन्योन्यविपरीतकैः ।
स्तूयंते पार्वतीलक्ष्मीरुद्रकृष्णादिदेवताः ॥६९॥

केषुचिन्मूर्तिपूजा च शास्त्रेषु तु निषिध्यते ।
शास्त्रेषु केषुचिद्दिष्टा प्रतिमार्चा सुयत्नतः ॥७०॥

॥ तथाचोक्तं ॥

यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरं ।
हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥

काष्ठलोष्ट्रेषु मूर्खाणां युक्तस्यात्मनि देवता ।
मृच्छिलाधातुदार्वादिमूर्त्तावीश्वरबुद्धयः ॥
क्लिश्यन्ति तपसा मूढाः परां शांतिं न यांति ते ॥

काञ्चनीं प्रतिमां कृत्वा नानारत्नमयीं शुभां ।
पूजयेद्यस्तु विधिना स याति परमं पदमित्यादि ॥

ईदृशात्प्रोक्तशास्त्रोक्तमतान्योन्यविपर्य्ययात् ।
तन्मध्ये केषुचिद्भ्रांतिरयाथार्थ्यं च भाति ह ॥७१॥

सर्वेष्वेवं पुराणेषु वृत्तांता अत्यसंगताः ।
किंवा लज्जाकरा वार्त्ता वर्त्तंते वै सहस्रशः ॥७२॥

मुख्यातभास्करेणापि स्वसिद्धांतशिरोमणौ ।
भूमिराकाशशून्यस्था गोलाकारा च वर्ण्यते ॥७३॥

सिद्धांतविपरीतेषु पुराणेषु तु भूरियं ।
पद्माकारा मृषाप्रोक्ता कूर्म्मपृष्ठोपरि स्थिता ॥७४॥

तदृते भूग्रहार्केन्दुताराादिविषयास्तथा ।
पुराणेषूदिता वार्त्ताः प्रतिभांत्ययथार्थिकाः ॥७५॥

पुराणैर्वर्णिताः सप्त घृतक्षीरादिसागराः ।
सर्वभूमिपरिब्राजिपोतोढैः क्वापि नेक्षिताः ॥७६॥

सर्वज्ञेनेश्वरेणापि भ्रांतिः कर्त्तुं न शक्यते ।
अतो भ्रमान्वितं शास्त्रमैशं नास्ति कदाचन ॥७७॥

शिष्य उवाच

शास्त्रेषु भारतीयेषु गुरो ह्यन्यं कमप्पुत ।
किं स्पष्टं मन्यसे दोषमयुक्तार्थसमन्वितं ॥७८॥

॥ गुरुरुवाच ॥

गङ्गावगाहमात्रोत्थं सौगम्येनाघमोचनं ।
न मह्यं रोचते शिष्यातीवकिल्बिषवर्द्धकं ॥७९॥

अत्यन्तसुकरं गागं स्नानं हीनपरिश्रमं ।
न भव्याङ्घ्रिघृणास्नानशोधिताघकलंककं ॥८०॥

यतोऽघमोचनं सद्यः स्नानेन यदि गम्यते ।
तदा किमनुतापेन किं श्रमेण प्रयोजनं ॥८१॥

नरा गांगोदमात्रे ये विश्वसंत्यघमुक्तये ।
पुण्यान्तःकरणास्ते हि भवितुं शक्नुयुः कथं ॥८२॥

एतैर्नाविश्यिका बुद्धा वरा हृत्स्था पवित्रता ।
पापहृत्यक्षमे स्नाने विश्वसद्भिर्विमोहितैः ॥८३॥

अन्यच्च केवलात्पापाज्ज्ञेयो दुःखसमुद्भवः ।
पुण्येनेशेन निर्णीतो दण्डाय मानुषाङ्घसां ॥८४॥

अतो हि स्नानमात्रेण यदि नश्यति किल्बिषं ।
कथं तज्जातदुःखौघैर्न मुच्यन्ते नरास्तदा ॥८५॥

पुनर्यद्धृदये कुत्स्या पापासक्तिर्न नश्यति ।
स कल्मषक्षमामीशान्न प्राप्नोति कदाचन ॥८६॥

यतः सर्वज्ञकः पुण्यो नरस्वान्तपरीक्षकः ।
वाह्याद्धर्मादसंतुष्टो हृत्पुण्यं काङ्क्षतीश्वरः ॥८७॥

परन्तु स्नानतः पश्चात्कामगर्वाद्यघेषु ह ।
आसक्तिरक्षता स्वान्ते नृणां तिष्ठति पूर्ववत् ॥८८॥

इति स्वीकर्त्तुमर्हन्ति स्नातारः शरलात्मकाः
स्नानेनाङ्घोबलात्कारं ज्ञात्वाऽनष्टं स्वहृत्सु ह ॥८९॥

अतः कुत्स्याघसक्तानि नृहृन्दि न पुनाति यत् ।
तद्‌गङ्गासलिले स्नानं पापं हर्त्तुन्न शक्नुयात् ॥९०॥

न ज्ञेया कापि गंगायां स्थिता शक्तिः फलान्विता ।
नाङ्घोनाशाय सामर्थ्यं लोकस्य वापि पुण्यदं ॥९१॥

या गंगा दैहिकान् रोगानपिहर्त्तुन्न शक्नुते ।
न वाऽपि विपदा ग्रस्तान् स्नातॄन्मोक्तुं कदाचन ॥९२॥

सा पापरूपकं रोगं देहरुग्भ्योऽत्यसत्तरं ।
विपद्भ्यश्चैव सर्वाभ्योऽधिककृच्छ्रसमन्वितं ॥९३॥

सर्वस्य चापि दुःखस्य लोके हेतुं सुकुत्सितं ।
कथं स्वस्पर्शमात्रेण समर्थो स्याच्चिकित्सितुं ॥९४॥

इत्याद्यैः सुगमैः पापमुक्त्युपायैः स्वकिल्विषं ।
यो मन्येताशु मोच्यं स तिष्ठेदङ्कोरतो हृदि ॥९५॥

॥ शिष्य उवाच ॥

विश्वस्याद्यो ध्रुवं खृष्टे ऽघमुक्तिस्तेन लभ्यते ।
इति प्राग्भवता प्रोक्तं खृष्टीयमतवर्णने ॥९६॥

खृष्टविश्वासमात्रेणाघमुक्तिर्यदि लभ्यते ।
तदा किं मुक्तिसौगम्यान्नाघे मज्जंति खार्ष्टकाः ॥९७॥

॥ गुरुरुवाच ॥

विश्वासात्केवलात् पापमोचनं गम्यते ऽनुगैः ।
खृष्टस्य यस्तु पापात्मा तिष्ठेन्नाघैः स मुच्यते ॥९८॥

अनुतापं विना हृत्स्थं पापत्यागसमन्वितं ।
न को ऽपि मानुषः खृष्टानुयायी वास्तवो मतः ॥९९॥

अन्यच्च ज्ञायते शिष्य शास्त्रेण खार्ष्टकेन ह ।
पापस्य दौष्ट्यं कुत्स्यमीशेन घृणितस्य वै ॥१००॥

यतोहि हृतये यस्य महायज्ञो नृमोचकः ।
अर्च्येशसूनुना सिद्धः सम्यगावश्यकोऽभवत् ॥१०१॥

यस्यापि शोधनं खृष्टप्रायश्चित्तेन केवलं ।
आश्चर्य्येणैश्वरेणैवं तेन प्राप्तुमशक्यत ॥१०२॥

तदङ्गो विभुना दण्ड्यं किंन स्यात्सद्विचारिणा ।
मानवैश्च घृणायोग्यं हेयं चापि समन्ततः ॥१०३॥

॥ शिष्य उवाच ॥

पुराणान्यवहेयानि ज्ञायन्ते तव तर्कतः ।
तंत्राणि चात्यपूतानि मन्ये ऽप्रीतिकरः स्वयं ॥१०४॥

परन्तु निर्मला वेदाः सह षड्दर्शनैर्गुरो ।
कुत्स्यार्थरहिताः किं न माननीया विपश्चितां ॥१०५॥

॥ गुरुरुवाच ॥

दृढो वेदानुगः कोऽपि यदि स्यात्तर्हि खल्वसौ ।
तद्विरुद्धं निराकुर्यात्पुराणादिस्थितं मतं ॥१०६॥

वेदेषु कुत्रचिच्छिष्य यथार्थं गुणवर्णनं ।
माहात्म्यस्तुतिसंयुक्तं क्रियते परमात्मनः ॥१०७॥

इन्द्राग्निप्रभृतीनान्तु पूजा तत्रोपदिश्यते ।
अयुक्ता ह्यात्मरूपेणार्चकैस्त्याज्या समन्ततः ॥१०८॥

तथैव प्राप्यते तत्र नरबुद्धिभ्रमोत्थितः ।
अध्येतृभ्रामको दोषो यथार्थार्चाविनाशकः ॥१०९॥

सर्वाणि पिण्डपान्येव व्याप्नोति यद्यपीश्वरः ।
तथापि विद्यते व्यक्तः स्वसृष्टसमुदायतः ॥११०॥

वेदेषु तु न सम्यक् स भिन्नः प्रोक्तः स्वसर्गतः ।
प्रत्युताशेषवस्तुभ्योऽविविक्तो वर्ण्यते मृषा ॥१११॥

यद्यदस्ति तदीशोऽस्तीत्यादिवाक्यैरसंगतैः ।
याथार्थ्यविपरीतैश्च भ्राम्यंते वेदपारगाः ॥११२॥

श्रुतिवाक्यानुकूला च स्फुटा वेदांतिनां मतिः ।
भाति गीतादिशास्त्रोक्ता दृढभ्रांतिसमन्विता ॥११३॥

पवित्र ईश्वरो ज्ञेय आत्मरूपो ह्यनंतकः ।
अनादिश्चाप्यनिर्वाच्यश्चाविकारी सनातनः ॥११४॥

आत्मभ्यः पापलिप्तेभ्यः क्षुद्रेभ्यश्च नृणां विभुः ।
स्थूलेभ्यश्चपदार्थेभ्योऽसौ कथं न विविच्यते ॥११५॥

धीमान् यः कोऽपि शास्त्राणां विस्मृत्य भ्रामिकां मतिं ।
भावं स्वं मानुषं ध्यायेन्माहात्म्यमीश्वरस्य च ॥११६॥

अत्यंतां क्षुद्रतां स्वीयां भीतो ज्ञात्वा सपापकां ।
ब्रह्मास्मीति मृषावादी भूयो मा गल्भतामसौ ॥११७॥

अनन्तःपुण्य ईशः क्व तेजस्वी सर्वशक्तिमान् ।
क्व पापो मानुषः क्षुद्रो दुर्बलस्तुच्छशक्तिकः ॥११८॥

॥ शिष्य उवाच ॥

यथार्थं भवतो वाक्यं दृढतर्कसमन्वितं ।
अतीव रोचते मह्यं सत्यमत्यर्थिने गुरो ॥११९॥

किंतु यत्पंडितैः प्रोक्तं मायारूपमिदं जगत् ।
यत्कारावंधनादात्माऽनंतरूपो नराश्रितः ॥१२०॥

अज्ञानविप्लुतो भूत्वा मोक्षं कांक्षति नित्यशः ।
तस्यैव विषये किं त्वं मन्यसे वद मे गुरो ॥१२१॥

॥ गुरुरुवाच ॥

अयथार्थं मतं तेषां बोध्यमीदृशवादिनां ।
न मायारूपको ज्ञेयः संसारः किन्तु वास्तवः ॥१२२॥

नरेष्वनंतमात्मानं स्थितं ये ये वदंति ह ।
अज्ञानमोहितं त्वेतद्देहकारानिबंधनात् ॥१२३॥

तेषामसंगता ज्ञेयातीवाप्रामाणिका मतिः ।
त्यक्तव्या सा समस्तैश्च यथार्थतर्कतत्परैः ॥१२४॥

संसारो वास्तवो ह्यस्तीति प्रत्यक्षप्रमाणतः ।
दृढादखंडनीयाद्धि सुष्ठु विज्ञः सुनिश्चितं ॥१२५॥

यादृशं ज्ञायते किंचिदिन्द्रियैर्मनसा धिया ।
तादृशं वस्तुतोऽस्त्येव नान्यथातत्कदाचन ॥१२६॥

तस्मान्न संस्थितो मर्त्त्येष्वात्मा पुण्यो ह्यनन्तकः ।
शरीरमात्रवासाद्यः पापाज्ञानपरिप्लुतः ॥१२७॥

परंतु वस्तुतः पापो ज्ञेय आत्मा नृषु स्थितः ।
सर्वेष्वेकैकशो भिन्नो ह्यंतवांश्च स्वभावतः ॥१२८॥

न हि मायामयं ज्ञेयं लघु वा किल्बिषं नृणां ।
वास्तवं त्वतिकुत्स्यं च दृढकृच्छ्रसमन्वितं ॥१२९॥

पीडादरिद्रतारोगशोकादिक्लेशसंचयः ।
ज्ञातव्य ईशनिर्णीतो दंडार्थं दुष्टकर्मणां ॥१३०॥

पुनर्यद्यभविष्यन् वै नरा अंशाःपरात्मनः ।
तदा ते सर्वदाऽस्थास्यन् सकलैशगुणान्विताः ॥१३१॥

नच ते दुर्बलाः पापा अज्ञाना मोहितास्तथा ।
कामादिरागलिप्ताश्च ह्यभविष्यन् कदाचन ॥१३२॥

जगत्यां परमं भातीन्द्रियार्थेषु प्रदर्शितं ।
ईशस्य कौशलं दिव्यं नृनानासौख्यकारकं ॥१३३॥

इन्द्रियाणीन्द्रियार्थाश्च ह्यन्योन्ययोग्यतान्विताः ।
आविष्कुर्वन्त्यनिर्वाच्यां धीमत्तां परमात्मनः ॥१३४॥

द्युभूमीभूषकाः सौम्या विषयाः खल्वसंख्यकाः ।
गृह्यंते नित्यशो नेत्रैः प्रस्तुताश्चित्ततृप्तये ॥१३५॥

वहिःस्थविषयाणां च लोचनानि ग्रहाय वै ।
निर्मितान्यतिसौक्ष्म्येण विज्ञाश्चर्यकराणि हि ॥१३६॥

तथैव श्रवणघ्राणादीन्द्रियाण्यैशकौशलात् ।
स्वस्वार्थग्रहणे नित्यं क्षमाणि रचितानि ह ॥१३७॥

व्यर्थानि मानुषा मूढाः सदा कर्माणि कुर्वते ।
नत्वीशः शक्नुयात्किंचिद्वृथा कर्तुं कदाचन ॥१३८॥

यद्यन्मायामयं शिष्य तुच्छं सम्यगनर्थकं ।
तत्कथं शक्यते क्वापि स्रष्टुं परमधीमता ॥१३९॥

॥ शिष्य उवाच ॥

निषिद्धा विषयासक्तिः पंडितैर्यैः समंततः ।
योगो यैरुपदिष्टश्च तन्मतिः किं न रोचते ॥१४०॥

॥ गुरुरुवाच ॥

स्वीयाः स्वाभाविका रागाः सुशास्याः संति मानवैः ।
तांस्त्वत्यावश्यकान् कोऽपि नोत्पाटयितुमीहतां॥१४१॥

प्रेमहर्षस्पृहाक्रोधशोकभीत्यादिकान्विभुः ।
नरेषु निदधौ रागान् नानाकर्मप्रवर्त्तकान् ॥१४२॥

औचित्यमात्रवित्तेर्न कोऽपि कर्म्मसु मानवः ।
प्रवृत्तश्चेष्टते यत्नादर्थलब्ध्यनपेक्षया ॥११८॥

रागैः क्षुधा तृषा युक्तैः स्वस्वविषयतत्परैः ।
नराणां रक्ष्यते जीवो बुद्धिमात्रादरक्षितः ॥१४३॥

मानुषाभोजनौचित्यान्न कदाचन भुंजते ।
क्षुधया त्वखिला मर्त्या अदन्ति खलु चोदिताः॥१४४॥

विरागा अभविष्यंश्चेत् सर्वे मर्त्याः समंततः ।
तदालस्येन बद्धास्ते ऽभविष्यन् गुणहीनकाः ॥१४५॥

निवृत्तिरभविष्यच्च स्वसांसारिककर्मणां ।
सुषुप्समानसैर्मर्त्यैस्त्यक्तानामनपेक्षया ॥१४६॥

यस्तु वै स्पृहया युक्तः स एव स्वार्थलब्धये ।
स्वरागचोदनाद्ध्रुवः परिश्राम्यति नित्यशः ॥१४७॥

एतस्मिन् विषये शिष्य दृश्यते परमात्मनः ।
धीमत्ता ह्यद्भुता दिव्या नृजातिकुशलान्विता ॥१४८॥

श्रमेण विद्यते सिद्धिर्नराणां विषयार्थिनां ।
पुण्यविद्यार्थलाभो हि जायते यत्नमात्रतः ॥१४९॥

तस्मान्न शिष्य कर्त्तव्यं रागाणामवहेलनं ।
सृष्टानां विभुना मर्त्यहिताय नतु हानये ॥१५०॥

न स्वार्थमात्रसिद्ध्यै च ह्यसर्जिषत मानवाः ।
संगत्यै त्वन्यमर्त्यानां नित्यालापचिकीर्षवः ॥१५१॥

येषामेतादृशो भावस्ते नार्हंति स्वतुष्टये ।
विसृष्टुं नरसंसर्गमुपकर्त्तुन्तु नॄन् परान् ॥१५२॥

स्त्रीभ्रातृसंततिस्नेहो युज्यते नृस्वभावजः ।
यत्स्नेहपात्रमेवास्ति तत् स्नेह्यं पण्डितैर्ध्रुवं ॥१५३॥

न वैराग्ये स्थितं पुण्यं सदसदवहेलके ।
नित्यायामीशभक्तौ तु चेष्टायुक्तक्रियासु च ॥१५४॥

विद्याभ्यासे स्वधीशक्तिसिद्ध्यै यश्चेष्टते नरः ।
बुद्धिं स्वामीशसेवार्थे मत्वा ज्ञानाय चार्पितां ॥१५५॥

धनं यो वात्मनि न्यस्तं विभुना मन्यते बुधः ।
न स्वार्थमात्रसिद्ध्यै तत्परार्थे त्वपि चार्पितं ॥१५६॥

सएव दर्पहीनात्मा ह्यीशभक्तात्मकश्च चेत् ।
ज्ञातव्यः पुण्यकृच्छिष्य नित्यचेष्टापरायणः ॥१५७॥

पुनर्यो विपदा ग्रस्तः सहते क्षान्तमानसः ।
न विपल्लाघवज्ञानान्न वा विषयहेलनात् ॥१५८॥

विपत्तिस्त्वीशविहिता मङ्गितार्येति प्रत्ययात् ।
एतस्य पुरुषस्यैव पुण्यं भाति यथार्थकं ॥१५९॥

विजहात्यखिलान् यस्तु विषयानवहेलया ।
संन्यासे तस्य किं पुण्यं निन्दामात्रसमुत्थिते ॥१६०॥

तथाच श्रेष्ठसंत्यागि हीशमृष्यवहेलकं ।
ईशानिष्टं च वैराग्यं त्याज्यं भूयाद्विपश्चिता ॥१६१॥

॥शिष्य उवाच॥

सामान्यमानुषाज्ञातदर्शनानां मतिं गुरो ।
न श्रेष्ठां मन्यसे त्वं किं मुक्तिदां च मनीषिणां ॥१६२॥

॥गुरुरुवाच॥

न शिष्य दर्शनैः सत्यं गम्यते नरकल्पितैः ।
अन्योन्यविपरीतार्थैर्मीमांसान्यायसांख्यकैः ॥१६३॥

वेदानामीश्वरोत्पत्तिर्यैः प्रमाणैर्निराकृता ।
तैरेव दर्शनानां च स्पष्टं भवति खण्डनं ॥१६४॥

॥शिष्य उवाच॥

तृतीयं शास्त्रयाथार्थ्यस्थापकं लक्षणं स्फुटं ।
शास्त्रेषु भारतीयेषु गुरो किन्न प्रकाशते ॥१६५॥

॥गुरूरूवाच॥

त्वत्प्रोक्तधर्मशास्त्रोक्ताचारा भारतवासिभिः ।
केवलैः संत्यनुष्ठेया न मर्त्यैरन्यवंशजैः ॥१६६॥

चातुर्वर्ण्यवहिःस्था ये शास्त्रानिर्णीतधर्मकाः ।
तेऽनुगा भारतीयस्य शास्त्रस्य स्युः कथं नराः ॥१६७॥

अस्मात्तु धर्मतो विप्रैर्लभ्यते फलमुत्तमं ।
पूज्यैः सर्वान्यजातीनामुत्कृष्टैश्चेति संमतैः ॥१६८॥

भूदेवैश्चेति शास्त्रोक्तैर्विश्वरिक्थाधिकारिभिः ।
धर्मस्य मूर्त्तिभिश्चैव धर्मकोषप्रपालकैः ॥१६९॥

स्वभावं यस्तु विप्राणामन्यवर्णनृणां तथा ।
ध्यात्वा विचारयेत् साधुर्विप्रोऽपि शरलात्मकः॥१७०॥

स विप्रान् क्षत्रियान् वैश्यान् शूद्रांश्चापि स्वभावतः ।
तुल्यान् समानभावांश्च स्वीकरिष्यत्यसंशयं ॥१७१॥

पापिनो द्वेषरागादियुक्ता भ्रान्त्यपरे यथा ।
शूद्रादिमानवाः सर्वे तथैव ब्राह्मणा अपि ॥१७२॥

नेन्द्रियैर्मनसा नैव न धिया न गुणान्तरैः ।
उत्कर्षो भाति विप्राणां विशेषो वा स्वभावजः ॥१७३॥

सर्वशास्त्रार्थवित्तौ हि गूढविद्याविचारणे ।
तुल्या धीसूक्ष्मता भाति शूद्रस्य ब्राह्मणस्य च ॥१७४॥

नृकार्य्येशार्चना चापि विप्रेण साध्यते यथा ।
तथैव साध्यते सम्यक् शूद्राद्यैर्भक्तमानसैः ॥१७५॥

इत्यादितर्कतः शिष्य मतो भारतनीवृति ।
विप्रादिजातिभेदो हि निराकृत्योऽस्ति धीमतां १७६॥

येष्वप्रामाणिका त्वेवमयुक्ता मतिरीदृशी ।
शास्त्रेष्वादिश्यते नित्यं नृसमत्वविनाशिका ॥१७७॥

न तानि विभुना भान्ति दत्तानि समदर्शिना ।
नरैस्तु कल्पितानीह संसारैश्वर्य्यलिप्सुकैः ॥१७८॥

शिष्य उवाच

इदानीं भवता प्रोक्तोऽतीव मे रोचते गुरो ।
प्रमाणसंयुतस्तर्को यथार्थो हि मया मतः ॥१७९॥

परन्तु पठनात्तस्यारुचिः किन्न भवेद्दृढा
भारत्यधर्मशास्त्रोक्तमतासक्तविपश्चितां ॥१८०॥

॥गुरुरुवाच॥

एवमस्ति यथात्थ त्वं किंतु सत्यमतस्य ह ।
सर्वेषां गोचरे वार्ता श्राव्या भवति यत्नतः ॥१८१॥

धर्म्या हि फलमत्यन्तं लभन्ते सत्यविन्निनः ।
तन्नीत्या दृढविश्वासाः प्रयान्तो मुक्तिवर्त्मनि ॥१८२॥

नरास्तु ये भ्रमाविष्टाः पुण्यमार्गं विहाय ते ।
चेक्रियन्ते क्रिया निंद्याः स्वभ्रान्तस्वान्तचोदनात् ॥१८३॥

नास्माकं जायते तोषः परेषां मतखण्डनात् ।
प्रत्युतारुचितस्तेषां क्लिष्टोऽस्मि शिष्य वस्तुतः ॥१८४॥

बुधानां भारतीयानामस्मि सत्यो हितेच्छुकः ।
तद्बुद्धेः सूक्ष्मतां वेद्मि काव्यशक्तिं च सुन्दरीं ॥१८५॥

वैयाकरणिकां विद्यां तेषां मन्येऽतिसंस्कृतां ।
गुणांश्च बहुलांस्तेषु विविधान् वेद्मि संस्थितान् ॥॥१८६

धर्मस्य विषये त्वेतान् भ्रामितानखिलान् ब्रुवे ।
यथार्थशास्त्रहीनांश्च ह्यप्राप्तमुक्तिमार्गकान् ॥१८७॥

तन्मुक्तिकांक्षया शिष्य तत्प्रेम्णा च प्रचोदितः ।
तर्कमाक्रोशहीनोऽहं श्रुतं प्रोचे त्वयाधुना ॥१८८॥

विचारयंतु धीमंतो मम तर्कं परीक्षकाः ।
सत्यं सर्वे च गम्यासुः सुप्रसादात्सदात्मनः ॥१८९॥

इतिमतपरीक्षायां भारतीयशास्त्रविचारो नाम
पचंमोऽध्यायः ॥

समाप्ताच श्रीमज्जान्म्यूरेण विरचितेयं
मतपरीक्षा ॥

——0000——

# सूचीपत्रं



—oooo—

# पश्चात्कृतश्लोकाः

पंचमाध्याये पंचविंशत्पृष्ठे नभोत्थानिष्फलतास्वेषु इति चतुर्णामपि श्लोकानामन्तरमिमे चत्वारश्च श्लोका ज्ञेयाः ॥

—oooo—

हितायावातरत्कृष्णः सतां नाशाय दुष्कृतां ।
इत्युक्तं भगवद्गीतावाच्यश्लोकद्वये स्फुटं ॥१॥

यथा चतुर्थाध्याये सप्तमाष्टमौ श्लोकौ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ॥७॥

परित्राणाय साधूनां विनाशाय च दुष्कृतां ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥८॥

सज्जनैर्नानुकार्य्यास्तु कृष्णेनाचरिताः क्रियाः ।
इति स्वीकर्त्तुमर्हन्ति साधवः शास्त्रपारगाः ॥२॥

यतो ऽतिकामुकः कृष्णो रेमे गोपीगणैः सह ।
तथा परस्त्रियं राधामहरद्व्यभिचारकृत् ॥३॥

एतादृक्कर्मणां ध्यानात्पत्क्यानां हि साधुभिः ।
गच्छेयुः साधवः शिष्य परित्राणं कथं नराः ॥४॥

स्वयं च दुष्क्रियः कृष्णो दुर्जनान् नाशयिष्यति ।
स्वीयानुकारिणोऽपीति न संभवति कर्हिचित् ॥५॥

तथैव मद्यपो ब्रह्मा स्वसुतारतिकामुकः ।
देवानामगमन्निंद्यामिति शास्त्रेषु वर्ण्यते ॥६॥

शिवश्च कामुको मत्तो वेश्यागाम्युग्रभावकः ।
इत्येवेतस्ततः शिष्य पुराणेषु प्रगीयते ॥७॥

बहुपुण्यक्रियायुक्ताऽवाच्या वार्त्ता दिवौकसां ।
अशेषा ज्ञायते सुष्ठु पंचलक्षणपारगैः ॥८॥

नराः कुकर्मकृद्देवपूजनात्किं कुकर्मकाः ।
न भवेयुः स्वकीयेष्टदेवकर्मानुकारिणः ॥९॥

तथाच गीतायां तृतीयाध्याये एकविंशतितमः श्लोकः

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥२१॥

ये येऽपूतक्रियान्देवान्नित्यं ध्यायन्ति किन्न ते ।
तेषां भजेयुरङ्ग्भ्यांसि मलिनीकृतचेतसः ॥१०॥

तथा नीत्युपदेशा ये भान्ति शास्त्रेष्वितस्ततः ।
प्रायो देवप्रमाणैस्ते निरस्यन्तेऽघचोदकैः ॥११॥

देवताः को नरो ज्ञात्वा कामक्रोधवशीकृताः ।
नार्घं कुर्वीत रागार्तो व्याजेन देवताऽङ्घ्रिसां ॥१२॥

देवाः कर्माणि कुत्स्यानि ये कुर्वन्ति कुनायकाः ।
भवेयुस्ते कथं शिष्य पूजार्हाः पामरैरपि ॥१३॥

॥ पश्चात्कृतश्लोकाः ॥

पंचमाध्याये वेदानामीश्वरोत्पत्तिरितिचतुःपञ्चाशत्तमश्लोकानन्तरं शिष्य उवाच इत्यस्मात्मागमे एकोन विंशतिश्लोका ज्ञातव्याः

—0000—

ज्ञानान्मुक्तिर्भवेत्सा तु लय एवास्ति ब्रह्मणि ।
इति दर्शनषट्कस्य मतसारोऽवगम्यते ॥१॥

तत्र नावगते सुष्ठु शिष्य दार्शनिकैरुभे ।
न ज्ञानमात्रतो मुक्तिर्न च मुक्तिर्लयात्मिका ॥२॥

मुक्तिस्तु वास्तवा याऽस्ति पापमोचनमेव सा ।
नष्टाघसक्तिकानाञ्च नित्यानन्दस्वरूपिका ॥३॥

विवेकज्ञानतः सिद्धा लयीभयाः परात्मनि ।
इत्थं यः प्राह तेनाच्योऽप्यपवाद्यतयीश्वरः ॥४॥

न तेन ज्ञायते सम्यगनन्तत्वं परात्मनः ।
न स्रष्टृत्वं न माहात्म्यं न तेजो नाविकारिता ॥५॥

न वा॰पि सर्वभूतानां कृतानामीश्वरेच्छया ।
सृष्टत्वम॰न्तवत्त्वञ्च सृष्टं तेनावगम्यते ॥६॥

अनादिरीश्वरो॰सृष्टः स्रष्टा मर्त्यस्थितात्मनां ।
आत्मानस्तु मनुष्यस्था असर्जिषत सादयः ॥७॥

सृष्टस्रष्ट्रोरभेदो वै भिन्नयोः संभवेत्कथं ।
सृष्टस्य लयनञ्चैव स्रष्टरीत्यत्यसंगतं ॥८॥

यो लयो ब्रह्मणि प्रोक्तो नाशतुल्यः स विद्यते ।
यन्निबोधे गते किं न विलीनानां क्षयो भवेत् ॥९॥

अभेदमननेनेशार्चाभीयुक्ता तथा नरैः ।
कृत्यं स्वप्नद्रुताज्ञामं निर्वेद्य विनश्यति ॥१०॥

पुनर्न ज्ञानतः शिष्य विवेकाद्वा स्वभावजा ।
नृजातेर्भ्रष्टता॰घौघजनिका क्वापि नश्यति ॥११॥

यः पारमार्थिकज्ञानकोषं स्वस्मिन् हि संस्थितं ।
मन्येतोत्कर्षबोधेन दर्पो वर्द्धेत तद्धृदि ॥१२॥

तस्माद्दार्शनिकाः सर्वे शिष्य सूक्ष्मधियो॰पि ते ।
यथार्थमैश्वरज्ञानं न यान्ति स्वान्तपावनं ॥१३॥

अत्यन्तमीश्वरः पुण्यः पापाप्रीतिकरो दृढं ।
नृस्वान्तसर्वमर्मज्ञो नित्यसाक्षी च गुप्तदृक् ॥१४॥

कुचिन्तातोऽप्ययंसन्तुष्टो ह्यविस्मर्त्ता नराङ्घसां
शेषेऽमुत्र करिष्यंश्च विचारं न्यायतो नृणां ॥१५॥

इत्यादिरुपदेशो वै यस्मिन् शास्त्रे मुहुर्मुहुः ।
यत्नान्न दिश्यते तन्नॄन् सत्यमार्गं नयेत्कथं ॥१६॥

ईश्वरोऽस्तीति सर्वत्र लोके स्वीकुरुते जनः ।
किंत्वेतन्मात्रवित्तेः को मधुरं किल्विषं त्यजेत् ॥१७॥

किन्त्वङ्घोदण्डदः पुण्यो नित्यं पश्यति मां विभुः ।
इतिभीत्यन्विता चिन्ता यत्स्वान्ते प्रविशेद्दृढं ॥१८॥

स एव केवलः सेवामीश्वरस्य यथार्हिकां ।
ससर्वकल्मषत्यागां खलु कर्त्तुं शकिष्यति ॥१९॥

# ERRATA.

——oooo——

| Page. | Slok. | Line. | incorrect. | correct. |
|---|---|---|---|---|
| ii | ... | 9 | with baser | with the baser |
| 12 | 31 | 1 | कस्मिंश्चित् श्राद्ध | कस्मिंश्चिच्छ्राद्ध |
| 22 | 66 | 1 | गर्ह्यात्त्यामकलकतः | गर्ह्यात्पापकलङ्कतः |
| — | 67 | 2 | भ्राता | भाता |
| — | 69 | 2 | स्त्रैश्च | ह्रैँ श्च |
| 23 | 79 | 1 | परीक्ष्मन्ते | परीक्ष्यन्ते |
| — | — | 2 | सम्यद् | सम्पद् |
| 29 | 15 | 1 | ा'ह्वुताः | ाह्रुताः |
| 37 | ... | 1 | पि | वि |
| 39 | 80 | 2 | भव्याङ्घ्रोघृणास्नान | भव्याःङ्घ्रोघृणा स्नान |
| 45 | 127 | 2 | शरीरमापवासाद्यः | शरीरवासमाचाद्यः |